# ॥ विज्ञानगणराजस्तोत्रम् ॥

श्री गणेशायनमः ।
अत्रिरुवाच ।
शृणु पुत्र प्रवक्ष्यामि शान्तियोगं सनातनम् ।
ब्रह्मणा कथितं ह्येतद्येन शान्तोऽहमञ्जसा ॥ १॥

अस्माकं कुलदेवत्वं प्राप्तो गणपतिःप्रभुः ।
स वै देवाधिदेवानां कुलदेवः प्रकीर्तितः ॥ २॥

शान्तियोगस्वरूपं तं जानीहि त्वं महामते ।
भजस्व सुप्रयत्नेन तदा शान्तिमवाप्स्यसि ॥ ३॥

गणेशात्सर्वमुत्पन्नं तेन संस्थापितं सुत ।
तस्याराधनमात्रेण कृतकृत्याः शिवादयः ॥ ४॥

नामरूपात्मकं सर्वं जगद् ब्रह्म प्रकथ्यते ।
तदेव शक्तिरूपाख्यं ब्रह्मासद्रूपकं परम् ॥ ५॥

तत्रामृतमयं भानुमात्माकारेण संस्थितम् ।
सद्रूपं तं विजानीयाद् ब्रह्म वेदे प्रकीर्तितम् ॥ ६॥

तयोरभेदतो ब्रह्म समं सर्वत्र संस्थितम् ।
सदसन्मयगं विष्णुं जानीहि वेदवादतः ॥ ७॥

तेभ्यो विलक्षणस्तुर्या नेतिरूपः प्रकीर्तितः ।
निर्मोहः शिवसंज्ञश्च स्वाधीनं ब्रह्म तद्बुधैः ॥ ८॥

चतुर्णां ब्रह्मसंयोगे स्वानन्दः कथ्यते बुधैः ।
स वै मायामयः साक्षाद्गणेशो वेदवादिभिः ॥ ९॥

अन्तर्बाह्याः क्रियाः सर्वा ब्रह्माकारः प्रदृश्यते ।
कर्मयोगः स विज्ञेयः संयोगः कर्मणां सुत ॥ १०॥

ज्ञानात्मचक्षुषा ज्ञानं यद्यद्भवति योगिनाम् ।
तेषामभेदको योगो ज्ञानयोगः प्रकीर्तितः ॥ ११॥

ज्ञानानां कर्मणाम् चैव भेदे योगः समात्मकः ।

आनन्दात्मकरूपोऽयं द्वैधनाशे स प्राप्यते ॥ १२॥

स्वेच्छया कर्मयोगश्च धृतो येन महात्मना ।
स्वेच्छया ज्ञानयोगश्च स्वेच्छयानन्दयोगकः ॥ १३॥

स्वेच्छया स त्रिभिर्हिनः सहजाख्यः प्रकथ्यते ।
सदा स्वाधीनरूपश्च स्वेच्छया क्रीडते स्वयम् ॥ १४॥

ब्रह्मभूतात्मको योगः स्वानन्दाख्यः प्रकीर्तितः ।
तत्र स्वाधीनता पुत्र पराधीना त्रिधा कृता ॥ १५॥

ब्रह्मणि ब्रह्मभूतस्य स्वतः परत एव च ।
उत्थानं नास्ति संयोगात्स्वस्वरूपिणि योगिनः ॥ १६॥

स्वानन्दे सुतसंयोगो जगतां ब्रह्मणां भवेत् ।
सर्वाभेदेन योगोऽयं तस्मान्मायासमन्वितः ॥ १७॥

अयोगात्मकयोगश्च सदा संयोगवर्जितः ।
जगतां ब्रह्मणां तत्र प्रवेशोऽतो न विद्यते ॥ १८॥

सदा निर्मायिको योगः स्वसंवेद्यविवर्जितः ।
स्वकीयाभेदहीनत्वान्निवृत्तिर्योगिभिर्धृता ॥ १९॥

ब्रह्म ब्रह्माणि संस्थं यन्नागतं न गतं पुनः ।
स्वानन्दनाशतस्तुभ्यं ब्रह्मभूतमयोगकम् ॥ २०॥

ब्रह्मस्वानन्दवासी स गणेशः कथ्यते बुधैः ।
स्वानन्दात्मात्मकः प्रोक्तो वेदेषु वेदवादिभिः ॥ २१॥

क्रीडात्मको गणेशानः स्वानन्दः परिकीर्तितः ।
संयोगात्मकरूपेण स्वस्वरूपेण तिष्ठति ॥ २२॥

क्रीडाहीनो गणेशानो योगरूपः प्रकीर्तितः ।
निरानन्दात्मकत्वेन सदा ब्रह्मणि संस्थितः ॥ २३॥

संयोगायोगयोगेन तयोर्नाशे गणेश्वरः ।
शान्तियोगात्मकः प्रोक्तो योगिभिर्योगसेवया ॥ २४॥

पूर्णयोगात्मकस्तत्र गणेशः परिकीर्तितः ।
मायायुक्तविहीनत्वं भ्रान्तिमात्रं प्रकीर्तितम् ॥ २५॥

पञ्चचित्तस्वरूपां त्वं बुद्धिं जानीहि पुत्रक ।
तत्र मोहकरी सिद्धिर्भ्रान्तिदा मोहरूपिणी ॥ २६॥

धर्मार्थकाममोक्षाणां सिद्धिर्भिन्ना प्रदृश्यते ।
ब्रह्मभूतमयी सिद्धिः कथिता योगिभिस्तथा ॥ २७॥

पञ्चधा चित्तवृत्तिर्या तत्र यद्बिम्बितं सुत ।
तदेव गणराजस्य रूपं बिम्बात्मकं परम् ॥ २८॥

धर्मार्थकाममोक्षेषु ब्रह्मभूतेषु यत्स्मृतम् ।
ऐश्वर्यं मोहदं जन्तुर्भ्रमति यत्र लालसः ॥ २९॥

पञ्चैश्वर्येषु यद्बिम्बं तदेव गणपस्य च ।
जीवं जानीहि पुत्र त्वं शान्तियोगस्य सेवया ॥ ३०॥

पञ्चचित्तप्रणाशे वै पञ्चैश्वर्ये लयं गतः ।
अधुना गणराजस्त्वं भविताऽसि न संशयः ॥ ३१॥

त्यजावधूतमार्गं त्वं भाववधूतमुख्यकः ।
अवधूय महच्चित्तं महदैश्वर्यमादरात् ॥ ३२॥

सदा शान्तिं भजस्व त्वं योगेन दत्त सत्वरम् ।
ददामि ते महामन्त्रं गणेशस्य विधानतः ॥ ३३॥

तत एकाक्षरं मन्त्रं ददौ पुत्राय भावतः ।
अत्रिर्योगविदां श्रेष्ठस्तं प्रणम्य ययावजः।३४ ।
साक्षाद्विष्णुस्वरूपश्च दत्तो योगविदांवरः ।
गङ्गाया दक्षिणे तीरे पूजयामास विग्रहपम् ॥ ३५॥

त्यक्त्वा भूमिस्वरूपं स शान्तिमास्थाय योगवित् ।
अभजत्तं तु भावेन गणपं हृदि चिन्तयन् ॥ ३६॥

महायोगी स्वयं दत्तो वर्षेणैकेन शौनक ।
शान्तिं प्राप्तो विशेषेण गाणपत्यो बभूव ह ॥ ३७॥

तं द्रष्टुं गणपस्तत्र ययौ भक्तं निजेच्छया ।
भक्तवात्सल्यभावेन दत्ताश्रमसुशान्तिदः ॥ ३८॥

तं दृष्ट्वा सहसोत्थाय प्रणनाम कृतांजलिः ।
तुष्टाव सुस्थिरो भूत्वा विघ्नेशं कुलदैवतम् ॥ ३९॥

दत्त उवाच ।
नमो गणपते तुभ्यं नमो योगस्वरूपिणे ।
योगिभ्यो योगदात्रे च शान्तियोगात्मने नमः ॥ ४०॥

सिद्धिबुद्धिपते तुभ्यं पञ्चचित्तप्रधारकम् ।
नानाविहारशीलाय गणेशाय नमो नमः ॥ ४१॥

सिद्धिदात्रे समस्तेभ्यो नानैश्वर्यप्रधारिणे ।
मोहहन्त्रे मोहकर्त्रे हेरम्बाय नमो नमः ॥ ४२॥

स्वानन्दवासिने तुभ्यं संयोगाभेदधारिणे ।
नानामायाविहाराय विघ्नेशाय नमो नमः ॥ ४३॥

सांख्याय ब्रह्मनिष्ठाय बोधहीनाय धीमते ।
परतोत्थानरूपाय विदेहाय नमो नमः ॥ ४४॥

बोधाय सर्वरूपाय देहदेहिमयाय च ।
स्वत उत्थानरूपाय प्रकृतेर्लय ते नमः ॥ ४५॥

सोऽहङ्काराय देवाय जगदीशाय ते नमः ।
महते बिन्दुरूपाय जगद्रूपाय ते नमः ॥ ४६॥

नादात्मकगुणेशाय नानावेषप्रधारिणे ।
ब्रह्मणे सृष्टिकर्त्रे च पितामह नमोऽस्तु ते ॥ ४७॥

हरये पालकायैव नानादेहधराय च ।
संहर्त्रे शङ्करायैव कर्माकाराय भानवे ॥ ४८॥

शक्तये च क्रियामूर्ते देवमानवरूपिणे ।
नागासुरमयायैव ढुण्ढिराजाय ते नमः ॥ ४९॥

स्थावराय नमस्तुभ्यं जङ्गमाय नमो नमः ।

जगद्रूपाय देवाय ब्रह्मणे ते नमो नमः ॥ ५०॥

किं स्तौमि त्वां गणाधीश योगाकारेण संस्थितम् ।
वेदादयः समर्था न त्वामतः प्रणमाम्यहम् ॥ ५१॥

धन्यो देहो मदीयोऽद्य पितरौ कुलमेव च ।
विद्या योगस्तपश्चैव त्वदंघ्रियुगदर्शनात् ॥ ५२॥

इत्युक्त्वा भक्तिभावेन परिप्लुतो महामुनिः ।
ननर्त हृष्टरोमाऽसौ आनन्दाश्रूः सृजन्मुहुः ॥ ५३॥

ततस्तं स्वकरे धृत्वा गणनाथः प्रसस्वजे ।
उवाच योगिनं पूर्णैर्वचनं परमाद्भुतम् ॥ ५४॥

गणेश उवाच ।
धन्योऽसि दत्त योगीन्द्रो जातोऽसि मदनुग्रहात् ।
शान्तिं लभसि पूर्णां त्वमचलां मयि सर्वदा ॥ ५५॥

कदापि ते न भेदो मे भविष्यति महामुने ।
त्वत्प्रीतिसम्प्रवृद्ध्यर्थमत्र स्थास्यामि निश्चलः ॥ ५६॥

गणेशज्ञानमाहात्म्यं त्वया ह्यत्रेर्मुखाच्छ्रुतम् ।
साक्षात्कारकृतं तस्मादिदं विज्ञानक्षेत्रकम् ॥ ५७॥

विज्ञानगणपो दत्तनाम्ना ख्यातो भवाम्यहम् ।
दर्शनाच्छान्तिसन्दाता भविष्याम्यत्र मानद ॥ ५८॥

अत्र वासं प्रकुर्वन्ति मदर्थं भक्तिसंयुताः ।
शान्तियोगं सदा तेभ्यो दास्यामि ते स्वसन्निधौ ॥ ५९॥

इदं पुरा शिवेनैव ज्ञानं साक्षात्कृतं स्वयम् ।
विज्ञानेश्वरनामा मे कृतो मया स शङ्करः ॥ ६०॥

तस्यात्र सन्निधिं स्थित्वा त्वया तथा सुसाधितम् ।
अतः शङ्करमित्रत्वं प्राप्तोऽसि मदनुग्रहात् ॥ ६१॥

त्वया कृतमिदं स्तोत्रं योगशान्तिप्रदं भवेत् ।
पठतां शृण्वतां नृणां ब्रह्मीभूतकरं तथा ॥ ६२॥

धर्मार्थकाममोक्षाणां दायकं प्रभविष्यति ।
सर्वसिद्धिप्रदं चैव सर्वेभ्यो ज्ञानदायकम् ॥ ६३॥

इत्युक्त्वाऽन्तर्दधे तत्र गणेशो भक्तवत्सलः ।
दत्तः खिन्नश्च तं ध्यात्वा तस्थौ तत्र प्रजापते ॥ ६४॥

ततस्तत्कृपया तेन स्वात्मा तत्र समर्पितः ।
योगाभेदमयत्वेन जात आत्मनिवेदकः ॥ ६५॥

दत्तो भक्तो गणेशश्च स्वामी तस्येति नाशितम् ।
स्वामिनि सेवकः सोऽपि तदाकारेण संस्थितः ॥ ६६॥

इयं भक्तिर्गणेशस्यात्मनिवेदनरूपिणी ।
दत्तेन सा धृता मुख्या शान्तियोगमयत्वतः ॥ ६७॥

एतस्मिन्नन्तरे तत्र प्रकटोऽभूत्स्वयं शिवः ।
विज्ञानेश्वरनामासौ दत्तं तं परिषस्वजे ॥ ६८॥

अहो दत्त महाभाग मम मित्रत्वमागतः ।
अत्रैवाहं गणेशानं ध्यायामि योगसेवया ॥ ६९॥

ततो दत्तं पुरस्कृत्य शङ्करो ब्राह्मणैः सह ।
गणेशं स्थापयामास गङ्गाया दक्षिणे तटे ॥ ७०॥

विज्ञानगणराजेति नाम चक्रे महर्षिभिः ।
तदादिक्षेत्रविख्यातं बभूव गणपस्य तत् ॥ ७१॥

विज्ञाननामकं पुण्यं शान्तियोगफलप्रदम् ।
सर्वसिद्धिकरं क्षेत्रं यात्राकारि जनस्य च ॥ ७२॥

इति मुद्गलपुराणोक्तं विज्ञानगणराजस्तोत्रं समाप्तम् ।